वाणीं भजत गैर्वाणीम्!

# गैर्वाणी

## मासिकी पत्रिका


| संपुटः १६ | JULY 1978 | क्रमांकः ७ |
| --- | --- | --- |





| कालयुक्ति आषाढाङ्कः | शकाब्दाः 1900 | मूल्यम् ०-५० पैसाः |
| --- | --- | --- |

# विषयसूचिका







# श्रीमहालक्ष्मीस्तुतिः

ति. गो. अनन्तसुब्रह्मण्यम्,
सङ्गीतभूषणम्, तिरुपति ।

रागः – सहाना
तालः – आदि

आ – स-रि-ग-म-प-म धानि-सं
अ – सं-नि-ध-प-म-गा-म-री-ग-रि-स

पल्लवि

महालक्ष्मी माश्रयेऽहं सदा
महादेव सहोदरीं मुदा ॥ ॥ महा ॥

अनुपल्लवि

महाविष्णुहृदयनिवासिनीम्
महासाम्राज्यादिप्रदायिनीम् ॥ ॥ महा ॥

चरणम्

क्षीरार्णवसम्भवसुभगाम्
क्षितिजां क्षितीशराघववल्लभाम् ।
क्षुधबाधादिशमनान्नपूर्णाम्
शिक्षितारिनरकासुरमहिताम् ॥ ॥ महा ॥



# गैर्वाणी

१५-७-१९७८ * कालयुक्ति आषाढाङ्कः

## आन्ध्र विश्वकलापरिषदः स्वर्णोत्सवः

**"तेजस्विनाऽवधीतमस्तु" —**

आन्ध्र विश्वकलापरिषदः स्वर्णोत्सवः १९७८ जूलै ८ दिनाङ्कात् १० दिनाङ्क पर्यन्तं राष्ट्रपति श्री नीलं संजीवरेड्डिमहोदयस्य उद्घाटनपुरस्सरं महता वैभवेन सम्पन्नः। १९२६ तमे वर्षे आन्ध्रप्रदेशे वंगसमुद्रतीरे विशाखपट्टणे प्रथमं आन्ध्रजनतायाः कृते विश्वविद्यालयः स्व० कट्टमञ्चि रामलिङ्गारेड्डिमहोदयस्योद्यमेन स्थापितः। तदनु कतिपयकालनन्तरं त एव अस्य विश्वविद्यालयस्य उपाध्यक्षा स्समभवन्। उपाध्यक्षाः सर्वेपल्लि राधाकृष्णपण्डितः, बोब्बिल राजा रामकृष्णरङ्गरावुः, जयपुर महाराजः विक्रमदेववर्मा इत्यादयो वितरणशालिनः, सि. डि. यस्. चेट्टिः, वि. यस्. कृष्णः, के. वि. गोपालस्वामी इत्यादयो निर्देशकाः (रिजिस्ट्रार्) बहुश्रुता बहवः प्राचार्याः प्राध्यापकाश्च आन्ध्र विश्वकलापरिषदः स्वर्णोत्सवभाग्यस्य पुरोहिता बभूवरिति निश्चप्रचम्। अद्यत्वे विश्वकलापरिषदः अधिष्ठाता श्री अप्पारावुमहोदयः सर्वतोमुखं दिशा प्रदर्शनं कुर्यादिति आशास्महे।

आन्ध्रप्रदेशे उस्मानिया विश्वविद्यालयस्य पश्चात् पञ्चाशद्वर्षपरिमिति मतिक्रान्तः विश्वविद्यालयः आन्ध्रविश्वकळापरिषदेव। श्रीवेंकटेश्वरविश्वविद्यालयः तस्या एव आध्वर्येण रूप-

कल्पनां प्राप्तः। नागार्जुन काकतीय विश्वविद्यालयौ तु अनद्यतने भूतकाले लब्धप्रतिष्ठौ, नाद्यावधि विश्वविद्यालयानुदानायोगेन साकल्येन परिगृहीतौ। अस्या मवस्थायां आन्ध्रविश्वकळापरिषदः मार्गदर्शनं आन्ध्रविद्यार्थिलोकस्य अत्यन्त मावश्यकं भवति ।

* * * * *

**"मा बिद्विषावहै" - जनतासंक्षोभः —**

भारते सर्वकारपक्षे जनतापक्षे कतिपयमासेभ्यः प्रागारभ्य यः सक्षोभस्य अवकाशः अनुवर्तते स्म, सः जून् जूलै मासयोः परां काष्ठां प्राप्य तस्य द्विधाकरणे सर्वसमर्थं स्समजनि। संस्था कांग्रेस् · प्रजास्वाम्य कांग्रेस् - यंग्टर्क् - भारतीय लोकदल् - जनसंघ् - सोषलिस्ट् – इति पक्षषट्कस्य सन्निपातरूपो जनता-पक्षः पालनव्यवहारे (उभयोः - पक्षगते प्रभुत्वगते च) अनैकमत्यदोषेण सन्निपातज्वरार्त इवाऽभवत्। परिणामतः केन्द्रमन्त्रिमण्डलात् आरोग्यमन्त्रिणः श्री राजनारायणस्य, गृहमन्त्रिणः श्रीचरणसिंहस्य च पदवीत्याग-पत्रं अनिवार्यविधया प्रधानमन्त्रिणा मुरार्जीमहाशयेन अभिलषितम्। त्यागपत्रप्रदानानन्तर श्रीचरणसिंह - राजनारायणौ स्वपक्षबलप्रदर्शनाय समुद्युक्तौ। ततश्चान्ये चत्वारो मन्त्रिणः मन्त्रिमण्डलं संस्कर्तृमिव त्यागपत्रै र्बहिरागताः। व्यक्तिगतैः कारणैः परस्परारोपणैः जनतापक्षे पक्षवातः (पक्षपातः) अजनिष्टेव। मन्त्रिमण्डलस्य अवशिष्टाः सभ्याः प्रधानमन्त्रिणमेव समर्थयामासुः यद्यपि, तथाऽपि जनतापक्ष-संक्षोभं निवारयितुमेव कटिबद्धा बभूवुः कतिचन। जनतापक्ष प्रधाननेतृणां मध्ये समुत्थिता काचिन्नवोतेजना; फलतः केचित् ताटस्थ्यवैखरीं श्रिताः उभयपक्ष संक्षोभमूलं निष्कासयितुं कृत भूरिपरिश्रमाः कृतकृत्याश्च बभूवुः। काले प्रवर्तितं चिकित्साविधानं सार्थक मासीत्।

पूर्वं इन्दिरायाः कृते क्षीरसागरे मथने प्रवृत्ते हालाहलाख्यो विषो व्यजृम्भत। इदानीमपि इन्दिरायाः कृते जनतासागरे संक्षोभ स्समुत्थितः। अयं कालकटविषः काले प्राप्ते महादेवसदशेन

जनता-जातीय कार्यवर्गेण निगीर्णः । भारतानुशासने क्षीराब्धेः प्रथमोपायन प्रदानमिव जनतापक्षस्य संक्षोभघट्टः प्रवृत्तः । इतः परं जनता क्षीराब्धेः एकैकशः उत्तमोत्तमानि उपायनानि आ इन्दिराप्राप्तेः, अथवा आ अमृतकलशोद्भवात् निर्वाचकदेवा लभेरन्निति आशास्यते ।

* * * * *

**दक्षिणयनम् —**

भारत राष्ट्रपतिः श्री नीलं संजीवरेड्डिमहोदयः दक्षिणभारते षट्सप्ताहावधिकं पर्यटनकार्यक्रमं विधित्सुः हैदराबाद् नगरं समागतः । बहुशः उत्तरभारतस्य राजकीयोष्मा तं महोदयं न चेत्तापयति स्म, तर्हि दक्षिणायन - कार्यक्रमः नैवं स्वाभाविकोऽभविष्यात् । स्थाने चैतत् "दाक्षिण्यं स्वजने"—इत्यादिकं सद्गृहस्थस्य अपेक्षितमेव खलु । राष्ट्रपतिदृक्पथे भारते द्वित्रा एव राजकीयपक्षा स्संघटिताः राष्ट्रीयसंक्षेमकाङ्क्षिणः तदनुगुण कार्यभागिनश्च भूयासुरिति आशाऽभिव्यक्ता । तदात्व एव राजकीयसंक्षोभः, पक्षाणां अन्तःकलहापरपर्यायः, नावकाशं प्राप्नुयात् । किंच, सर्वेषां पक्षाणां पाक्षिकपालनव्यवहारः क्रमबद्धो यदि भवेत्, तर्हि संक्षोभस्य नैवावकाशः । राष्ट्रपतिदृक्पथानुसारेण द्वित्राणां त्रिचतुराणां वा परिमितानां पक्षाणां अखिलभारतस्थायिभावं गतानां सत्त्वे भारतानुशासने राजकीयसंक्षोभः अकिञ्चित्करो भवेदिति द्योत्यते । राष्ट्रीय - योगक्षेमार्थं तादृशी राजनैतिक-परिस्थिति रपेक्षणीयैव । राजनीतिकोविदैः तत्तत्पक्षाधिनायकै रिद मवश्यावधेयमेव तदभिप्रायस्य आचरणयोग्यतां निरूपयितुम् । भगवतः श्री श्रीनिवासस्य कृपाकटाक्षं प्राप्य राष्ट्रपतिमहोदयः दक्षिणायन एव उत्तरायणकार्यक्रमं साधयितुं समर्थो भूयादित्याशास्महे ।



AUM

SHRI SHARADAMBAYAI NAMAH

## APPEAL TO THE ELITE OF BHARAT

## SANSKRIT SHOULD BE DECLARED THE NATIONAL AND OFFICIAL LANGUAGE OF THE UNION OF INDIA.

Sanskrit which is the most ancient, the greatest and the richest language of the whole world and more particularly of India, having for all time international stature and status, should be declared the National Language of the Union of Bharat after creating such a position in the constitution as Article 343 (1) which is non-existenet therein at present; Sanskrit should also be declared as the Official Language of the Union in place of Hindi Thus, the language controversy must be ended once for all. This is the only way for fostering and maintaining the unity and integration of the Great Bharat. There is no other way. Any other way is fraught with dangerous consequences. Pushing the implementation of Hindi will be repeating the terrible things we experienced during Feb–March, 1965 and for a long time thereafter. Let us not repeat past mistakes which entailed severe loss of public, and private property and precious lives. Let us, the elite, who know things and can think comprehensively come out of our skin-saving safety Dens and take the lead boldly in the interest of the good of our Nation, lead the masses in the right direction, create a strong public opinion for amending the Constitution declaring Sanskrit as the National and Official language of the Union of India on the lines suggested above and agitate for including these amendments in the proposed ALL COMPREHENSIVE CONSTITUTION

AMENDMENT BILL to be presented to Parliament during the ensuing budget session. We, in this movement, have no axes to grind. We have no other thought or motive than the good and glory of our country at heart and this is the only driving force behind this movement. Hence, it is the duty of every thinking Indian who has the good and glory of our country at heart to join this sacred movement and agitate for the constitutional Amendments making Sanskrit as the National and Official Lauguage of the Union of India.

Let us heed to the immortal warning of Plato and move ourselves to action:–

"The punishment that the wise and goodmen of a country, who decline to take interest in the affairs of their country, must suffer, is to be gladly ruled by the rest, viz., fools and knaves."

Let the immortal wordes of Swami Vivekananda the great patriotic and cyclonic monk of India inspire us :-

**"Arise! Awake! And stop not till the Goal (of Making Sanskrit the National and official language of India) is Reached"**

**Victory to Sanskrit** **Victory to Bharat**

Dt. 19-2-78

**GIRIJA**
Stuartpeta,
PITHAPURAM.
Pin: 533 450
E. G. Dt.
Andhra Pradesh.

**(B. V. SUBBARAIDU)**
Organising Secretary,
Akhila Bharatiya Samskrutha Rastra Bhasha Karini Sabha
All India Society for making Sanskrit the National Language,
Andhra Pradesh Area.

# श्रीराघवेन्द्रगुरुप्रार्थनाष्टकस्तोत्रम्

निबन्धा – पण्डितपद्मनाभाचार्यः, आत्मकूरु।

१. पुरा शंकुश्रोत्रो द्रुहिणवरिवस्यार्थ्यतिगते –
दिव श्शापात्तोषा दवकलितमर्त्योचिततनुः ।
शुभालीं दातुं यो विविधशुभरूपो ऽवतितरां
स दिव्यात्मा मन्त्रालयगुरु रयं नः कृपयतु ॥

२. महाभक्त श्शौरे श्चरणयुगलोलग्नहृदयो
भुवं यातःकायाधव इति सवित्री मनुसरन् ।
प्रभुः प्रह्लादोऽभून्निरुपमयशाः कर्म गमयन्
स दिव्यात्मा मन्त्रालयगुरु रयं नः कृपयतु ॥

३. ततो राड्बाह्लीकोऽजनि निजतनो र्भीमगदया
भवेन्मे निर्वाणं न तु परत एवेति मतिमान् ।
तदेवापत्स्वार्थं विपुलसुखदं यन्नयवशा
स दिव्यात्मा मन्त्रालयगुरु रयं नः कृपयतु ॥

४. कलौ काले घोरे मलिनमतिदुष्टे दशमते –
र्वचस्तोमोपास्तेर्हरिमति रसौ व्यासमुनिपः ।
अकार्षीद्भूस्मासत्समयमिह वाग्दावदहनात्
स दिव्यात्मा मन्त्रालयगुरु रयं नः कृपयतु ॥

५. यदा दुस्तत्वोपप्लवविकृतलोको विचलितः
सुधीन्द्राद्योगीन्द्रादधिगमितहंसाश्रमवरः ।
स्वभावात्सौधीं श्रीपरिमलविवृत्तिं व्यरचत्
स दिव्यात्मा मन्त्रालयगुरु रयं नः कृपयतु ॥

६. हयास्यास्याज्जातान् विवरणसुबोध्याननुदिनं
विचारार्हान् वेदान् सुजनसुमनःप्रीणनकृते ।
य आख्यत्कल्पद्रुः प्रवचनपथेना मितधियः
स दिव्यात्मा मन्त्रालयगुरु रयं नः कृपयतु ॥

७. पुनत्या स्तुङ्गाया स्तटमरमभीष्य त्वधिवसन्
जगत्सम्मान्यो दृग्विकृतिमुखरोगा नपनयन् ।
य आर्यः श्रीमद्राघवपदयुतः पाति निरतं
स दिव्यात्मा मन्त्रालयगुरु रयं नः कृपयतु ॥

८. नितान्तं तान्तोऽपि क्षपितपुरुबाधोऽद्य नितरां
धनं धान्यं पुत्रान्महितमतिभावं तदयते ।
उदीर्णं स्यात्प्रेप्स्यं सकलमपि यत्स्वामिकृपया
स दिव्यात्मा मन्त्रालयगुरु रयं नः कृपयतु ॥

सत्यप्रमोदतीर्थार्यपादपङ्कजकिङ्करः ।
महाव्याकरणाचार्यः पद्मनाभो बुधानुगः ॥

अप्पणाचार्यमानम्य राघवेन्द्रस्य सद्गुरोः ।
स्तोत्रमेतद् व्यधा भक्त्या स्तोतुः कल्याणदं ध्रुवम् ॥

इति सकलसद्वैष्णवदासस्य भूपालाभिजनस्य हरिभक्तोपपदस्य शाब्दिकसिंहस्य शाब्दिकाचार्यस्य व्याकरणवाचस्पतेः पद्मनाभस्य कृतिः ।



# वञ्चनैव प्रतीकारः

चल्ला लक्ष्मीनारायणशर्मा, पि. ओ.यल्.

ग्रामीणः कुक्कुटः कश्चित् वनं द्रष्टुं समागतः ।
मनोहरप्रदेशान् सः पश्यन् सानन्द मास्थितः ।।

तत्रैव जम्बुकः कश्चित् आहारार्थं परिभ्रमन् ।
दृष्ट्वा तं कुक्कुटं हृष्टः ग्रहीतुं पृष्ठतोऽगमत् ।।

भीतस्सः कुक्कुटस्सद्यः जम्बुकान्नयवञ्चकात् ।
आरुरोह तरो रग्रं आत्मानं रक्षितुं वने ।।

उपाय मन्य मालोच्य भग्नाशो जम्बुकस्तदा ।
प्रलोभयन् वचोभिस्तं वक्तुमेवं प्रचक्रमे ।।

भ्रातः! किमिति मां दृष्ट्वा वृक्ष मारूढवानसि ?
न भेतव्यं, न भेतव्यं समयोऽत्र प्रवर्तते ।।

कृतोऽत्र सर्वैः सम्भूय समयो मृगपक्षिभिः ।
न कोऽपि हन्यात् कमपि न द्रुह्येत् पीडयेदपि ।।

यो वै हन्यात् पीडयेद्वा तीव्रदण्डक्षमो भवेत् ।
अपि सर्वैश्च सम्भूय वर्तनीयं मुदा सदा ।।

अनुल्लङ्घ्य स्स समयः पक्षिभिश्च मृगैरपि ।
तदाप्रभृत्यरण्येऽस्मिन् निराघातं प्रवर्तते ।।

मृगाश्च पक्षिणश्चैवं परस्पराविरोधिनः ।
प्रवर्तन्ते च सस्नेहं सुस्निग्धाः सोदरा इव ।।

अतस्त्वया न भेतव्यं सञ्जातं सख्य मावयोः ।
आलिङ्गितुं त्वां सस्नेह मत्राहं समुपागतः ।।

नूनं दैववशादेव दृष्टोऽस्यद्य न संशयः ।
अहो ! ते गात्रलावण्यं त्रिजगन्मोहनं खलु ॥
गानं ते कोकिलारावं तिरस्कृत्य विराजते ।
गमनं तव हंसानां असूयां जनयिष्यति ॥
नाट्यं तव मयूराणां लज्जा मुत्पादयिष्यति ।
पक्षिराजसमानस्त्वं शौर्यधैर्यपराक्रमैः ॥
विसृज्य भीति मागच्छ दर्शयामि वनान्तरे ।
तरून् लता निकुञ्जांश्च पुष्पालङ्कारशोभितान् ॥
सानूनि कन्दरान् शैलान् नानामृगविराजितान् ।
तटाकान् सुन्दरांश्चैव पद्मोत्पलसुशोभितान् ॥
नाहं द्रोहं करिष्येते मित्रद्रोहोऽतिपातकः ।
विहाय शङ्का मागच्छ मैत्रीं मयि स्थिरां कुरु ॥
एवमुक्तं जम्बुकेन सस्नेहं मधुरं तथा ।
तन्निशम्य मनस्येवं चिन्तयामास कुक्कुटः ॥
जम्बुकोऽयं न विश्वास्यः वञ्चका मधुरोक्तयः ।
वञ्चनैव प्रतीकारः वञ्चकानां भवेत्सदा ॥
अतश्चाय मुपायेन वञ्च्यः खलु कथञ्चन ।
भवत्वेवं प्रवक्ष्यामि येनायं वञ्च्यते भृशम् ॥
सखे ! जम्बुक ! शृण्वेतद्वचो मम च यद्ध्रुवम् ।
आगच्छति नातिदूरे व्याघ्रः कश्चन सत्वरम् ॥
अहमप्यवरोहामि त्वा मालिङ्गितु मेव च ।
सर्वे वयं मिलित्वैव क्रीडेम विहरेम च ॥
इति तद्वाक्य माकर्ण्य भीतोयं जम्बुकोऽवदत् ।
सखे ! पुनर्मिलिष्यामि, नात्र स्थातुं हि युज्यते ॥

समयः खल्वनुल्लङ्घ्यः, कुतस्तव भयं सखे!
पृच्छन्तं कुक्कुटं चैवं प्रत्यवादीत् स जम्बुकः ॥
न घातुकैः मृगैः क्रूरैः समयः परिपाल्यते ।
क्रोष्टा चैवं वदन्नेव पलायत मपालयत् ॥



## सन्तापसन्देशः



"संस्कृतप्रचारकस्य" मासिकवृत्तपत्रस्य दिल्लीतः प्रचलितस्य सम्पादकमहोदयः श्रीरामचन्द्रजी भारती हृदय-गतिनिवृत्तेः ३०-६-७८ दिनाङ्के भृगुवासरे दिवंगत इति वार्तां ज्ञात्वा चित्तूरु नगरस्थायाः सर्वे संस्कृतभाषा प्रचारिण्याः सभायाः सभ्याः – नितान्तं खेदं प्राप्ताः ।

संस्कृतप्रचारे सहकार्यकर्तुः महोद्यमशीलस्य भारती महाशयस्य विनाभावं संस्कृतलोकस्य महतीं क्षतिं प्राप्तां भावयन्तः सर्वे संस्कृतसभ्याः तदीयमहात्मनः परमां शांतिं प्रयच्छतु भगवान् श्रीनिवासः इति प्रर्थयन्ति। तदीयानां कुटुम्बसभ्यानां दुःखोपशान्तिर्भूयादिति स्वीय सन्ताप-सन्देशं प्रेषयन्ति ।

इत्थम्,
आ. वरदराजः,
उपसम्पादकः, "गैर्वाणी"
सं. भा. प्र. सभा, चित्तूरु.

## अन्योक्तिः

— सुन्दरगोपालाचार्यः, कबितावल्लभः,
पाण्डिचेरी ।

वैराग्यं रक्तभाजामपि समुपहरन् पल्लवानां स्वभावात्
आकर्षन् सौमनस्यान्निखिलसुमनसां सौरभं सर्वहृद्यम् ।
कोऽपि प्रत्यग्रवित् परिमलमकरन्दार्द्ररम्यो रसालः
सर्वोत्कर्षो विभाति भ्रमर निजकुलैः त्रंस्तपान्थैः द्रुमैः किम्?



## जंगमं ब्रह्मस्वरूपम्

श्री जगद्गुरु काञ्चीकामकोटिपीठाधिपतयः श्रीजयेन्द्रसरस्वतीस्वामिपादाः चित्तूरुनगरं १२-७--७८ दिनाङ्के बुधवासरे प्रातः समागताः । पूजाविधानेन सन्दर्शनसन्देशप्रदानेन अशेषजना ननुगृह्य तस्मिन्नेव दिनान्ते अनुष्ठानादिकं परिसमाप्य वेलूरुनगरं प्रस्थिताः । स्वामिपादानां आवाससौकर्यं शिवालयप्राङ्गणे परिकल्पितमासीत् ।



# राष्ट्रीय गवेषणा विकास निगमः भारतस्य

[पूर्वानुबन्धः]

३) वैशिष्टच - पूर्ण - आविष्काराणां कृते आविष्कारकेभ्यो ५०० तः १०,००० रूप्यकान्ताः धनपुरस्काराः दीयन्ते । तथैव आविष्कृतीनां विकासार्थं (ऋणप्राप्त्यै) विश्वासार्हता - प्राप्त्यर्थं गुणवत्ता - प्रमाण - पत्राणि दीयन्ते ।

४) आविष्कारकेभ्यो आवश्यकं तान्त्रिकं परामर्शं यच्छति ।

५) आविष्कारकेभ्य स्तेषां आविष्कृतीनां वाणिज्यिकलाभ - निष्पादने साहाय्यं करोति ।

१८. साहाय्यार्थं रागविनि प्रति कथं आवेदितव्यम् ?

रागविनि - सकाशात् साहाय्य - कांक्षिभिराविष्कारकैर्मुद्रित - लेखरूप - अनुसारं स्वीय - कल्पनायाः, आविष्कारस्य वा विषये साम्प्रतिकी अवस्था, तान्त्रिकं सूक्ष्मविवरणं, व्ययस्य अनुमानं च दत्त्वा आवेदितव्यं भवति । तेन रागविनिः तदर्थं आवश्यक - साहाय्यस्य मात्रायाः प्रकारस्य च विषये गणयितुं (विमर्शयितुं वा) पारयति ।

१९. तेषां आवेदनानां मूल्याङ्कनं कथं क्रियते ?

प्रथमं तु संस्थया तेषां स्वयं परीक्षणाः क्रियन्ते । तान्त्रिक - वाणिज्यिक - संभाव्यतापूर्ण - कार्याणि बहिस्थेभ्यः तज्ञेभ्यो मूल्याङ्कनार्थं प्रेष्यन्ते । तेषां अभिप्रायाः पुनः एकस्याः मूल्याङ्कसमितेः पुटः अन्तिमनिर्णयार्थं स्थाप्यन्ते ।

## अन्योक्तिः

— सुन्दरगोपालाचार्यः, कवितावल्लभः,
पाण्डिचेरी ।

वैराग्यं रक्तभाजामपि समुपहरन् पल्लवानां स्वभावात्
आकर्षन् सौमनस्यान्निखिलसुमनसां सौरभं सर्वहृद्यम् ।
कोऽपि प्रत्यग्रवित् परिमलमकरन्दार्द्ररम्यो रसालः
सर्वोत्कर्षो विभाति भ्रमर निजकुलैः त्रस्तपान्थैः द्रुमैः किम्?



## जंगमं ब्रह्मस्वरूपम्

श्री जगद्गुरु काञ्चीकामकोटिपीठाधिपतयः श्रीजयेन्द्रसरस्वतीस्वामिपादाः चित्तूरुनगरं १२–७––७८ दिनाङ्के बुधवासरे प्रातः समागताः। पूजाविधानेन सन्दर्शनसन्देशप्रदानेन अशेषजना ननुगृह्य तस्मिन्नेव दिनान्ते अनुष्ठानादिकं परिसमाप्य वेलूरुनगरं प्रस्थिताः। स्वामिपादानां आवाससौकर्यं शिवालयप्राङ्गणे परिकल्पितमासीत्।



[पूर्वानुबन्धः]

३) वैशिष्ट्य - पूर्ण - आविष्काराणां कृते आविष्कारकेभ्यो ५०० तः १०,००० रूप्यकान्ताः धनपुरस्काराः दीयन्ते। तथैव आविष्कृतीनां विकासार्थं (ऋणप्राप्त्यै) विश्वासार्हता - प्राप्त्यर्थं गुणवत्ता - प्रमाण - पत्राणि दीयन्ते।

४) आविष्कारकेभ्यो आवश्यकं तान्त्रिकं परामर्शं यच्छति।

५) आविष्कारकेभ्य स्तेषां आविष्कृतीनां वाणिज्यिकलाभ - निष्पादने साहाय्यं करोति।

१८. साहाय्यार्थं रागविनिं प्रति कथं आवेदितव्यम्?

रागविनि - सकाशात् साहाय्य - कांक्षिभिराविष्कारकैर्मुद्रित - लेखरूप - अनुसारं स्वीय - कल्पनायाः, आविष्कारस्य वा विषये साम्प्रतिकी अवस्था, तान्त्रिकं सूक्ष्मविवरणं, व्ययस्य अनुमानं च दत्त्वा आवेदितव्यं भवति। तेन रागविनिः तदर्थं आवश्यक - साहाय्यस्य मात्रायाः प्रकारस्य च विषये गणयितुं (विमर्शयितुं वा) पारयति।

१९. तेषां आवेदनानां मूल्याङ्कनं कथं क्रियते?

प्रथमं तु संस्थया तेषां स्वयं परीक्षणाः क्रियन्ते। तान्त्रिक - वाणिज्यिक - संभाव्यतापूर्ण - कार्याणि बहिस्थेभ्यः तज्ज्ञेभ्यो मूल्याङ्कनार्थं प्रेष्यन्ते। तेषां अभिप्रायाः पुनः एकस्याः मूल्याङ्कसमितेः पुटे अन्तिमनिर्णयार्थं स्थाप्यन्ते।

२०. किं वै रागविनिः कर्मान्तस्य, प्रयोगालयस्य वा सुविधाः पूरयति ?

नास्ति रागविनि - अधीनत्वे कर्मान्तः, प्रयोगालयो वा। परं यत्र आवश्कं पश्येत्, तत्र प्रारूप - निर्मिति - प्रयोग - परीक्षार्थं बहिस्थेषु सर्वकारीयेषु, स्वायत्तेषु वा कर्मान्तेषु, प्रयोगालयेषु वा सुविधाः दातुं पारयति ।

२१. कीदृशं तान्त्रिकं साहाय्यं रागविनिः पूरयति ?

आविष्कारकेभ्य स्तेषां आविष्काराणां विकासे, एकस्वीकरणे, वाणिज्यिकीकरणे च 'रागविनिः' निःशुल्कं साहाय्यं, तान्त्रिक - मार्गदर्शनं च करोति ।

२२. कीदृशं साहाय्यं रागविनिः एकस्वार्थं यच्छति ?

रागविनिः, तया अनुमोदितानां आविष्काराणां, कल्पनानां वा भारते, यदि आवश्यकं परराष्ट्रेषु च, एकस्वीकरणार्थं तान्त्रिकं, वित्तीयं च साहाय्यं पूरयति । तदर्थं एकस्व - अभिभाषकै स्सह तस्याः विशिष्टा स्सम्बन्धा स्साधिता स्सन्ति ।

२३. आविष्काराणां वाणिज्यिकीकरणे रागविनिः आविष्कर्तॄन् प्रति कथं साहाय्यं यच्छति ?

रागविनि - सविधे विद्यमाना स्सर्वाऽपि सुविधा स्स्वतन्त्र - आविष्कारकेभ्य स्तेषां आविष्काराणां वाणिज्यिकलाभ - निष्पादनार्थं दीयन्ते। तदर्थं तैः स्वकीय - आविष्कृतयो रागविनि - अधीनाः कर्तव्याः भवन्ति ।

२४. किं करोति 'रागविनिः' विद्यार्थिषु आविष्करणप्रवृत्तेः प्रोत्साहनार्थम् ?

प्रतिवर्षे स्पर्धाद्वयं आयोजयति रागविनिः ।

क) आविष्कार - बुद्धिमत्ता - स्पर्धा ।

ख) आविष्कार - निबन्ध - निकषः इति ।

विद्यार्थिषु आविष्करण - प्रवृत्तेः प्रचोदनम् एव तत्र प्रधान हेतुः विद्यते । एतासु स्पर्धासु विजेतृभ्यो राज्यस्तरे, राष्ट्रीयस्तरे च पुरस्काराः दीयन्ते । दैनिक - वृत्तपत्रैषु विज्ञाप्य स्पर्धालवः एतासु स्पर्धासु, प्रवेशितुं आहूयन्ते ।

२५. रागविनि - प्रकाशनानि ।

क) "आविष्कारक - बुद्धिः" (इन्वेन्षन् इन्टेलिजन्स्) १९६५ तम - खिस्ताब्दे आरम्भितं इदं बहुजनप्रियं आंग्लं मासिकं वर्तते संस्थायाः। आविष्कारक स्तथा वैज्ञानिक - तन्त्रज्ञ - उद्यमपतयो विद्यार्थिनश्च विज्ञान - तन्त्रयो स्सर्वविध - क्षेत्राणां अद्यतन - विकासकार्यैं स्सुपरिचिता स्सन्तु इति हेतुं उररीकृत्य एतत्पत्रं नूतन - आविष्कार - उत्पाद - प्रक्रियादीनां विषये सारगर्भं - साहित्यं प्रकाशयति । एकतः वैज्ञानिक - आविष्कारकाणां तन्त्रज्ञै स्सह, अन्यतस्तु उद्योगै स्सह, सम्पर्कस्य माध्यमं इति एतत्पत्रकं ख्यातं अस्ति । एतद् बृहदाकारकं ४० पृष्ठात्मकं च भवति। अस्य वार्षिक - शुल्कं तावत् १०-०० रूप्यकाणि भवति । एकप्रतेः मूल्यं १-०० रू. ।

ख) 'आविष्कार' — १९७१ तम - खिस्ताब्दस्य मई-मासे हिन्दीमयं मासिकमिदं संस्थया प्रारंभितं अस्ति । अस्य

लक्ष्यं, आहिती च प्रथमवदेव भवतः। लघुरस्य आकारः ३० मात्रं पृष्ठानि च भवन्ति। एकप्रते मूल्यं ०-६० पैसाः, वार्षिक-शुल्कं तु केवलं ६-०० भवति।

ग) तान्त्रिक - टिप्पणयः।

घ) 'प्रारम्भिक - तान्त्रिक - टिप्पणयः'।

रागबिन्या वाणिज्यिक - लाभ - निष्पादनार्थं इति विज्ञापितानां एव प्रक्रियाणां, आविष्काराणां च विषये एताः टिप्पणयोः अभ्यर्थिभ्यो विना मूल्यं दीयन्ते। कस्याऽपि पदार्थस्य उत्पादन-कार्यं हस्ते ग्राह्यं वा न वा इति विषये, कोऽपि उद्यमी, एतासां पठनेन निर्णेतुं पारयेत्; ईदृशानि विवरणानि एतासु दीयन्ते।

ङ) 'रागविनि - प्रक्रिया - नामावलयः'।

रासायनिक, यान्त्रिक, विद्युतीय, वैद्युदाणविकीय प्रभृति विविध - विषयानु - वर्गमया ह्येताः प्रक्रिया - नामावलयोऽपि अभ्यर्थनोत्तरं विना मूल्यमेव उपलभ्या स्सन्ति।

सविस्तर - विवरण - काङ्क्षिभिः अधोः प्रोक्त - संकेतेन (आंग्ल्यां, हिन्द्यां, वा) पत्राचारः कर्तव्यः।

प्रबन्धः - निर्देशकः —

मॅनेजिंग डायरेक्टर्,
"राष्ट्रीय गवेषणा - विकास - निगमः, भारतस्य"
नॅशनल् रिसर्च् डेव्हलपमेण्ट कॉर्पोरेशन् आफ् इंडिया
६१ रिंग-मार्गः, लाजपत्नगरम्-३
नवादिल्ली - ११००२४ इति।

# मृत्युदंष्ट्रा

दीवि श्रीनिवासदीक्षितः, ताडिकोण्ड।

[नवम्बर् २९ दिनाङ्के आन्ध्रप्रदेशे विजृम्भित प्रचण्डवायुवृष्टि-हेलावर्णनाभरिता गेयखण्डिकेयम्]

गरलपूरित विपुलसारित
भुजगभीकर धवलदशना ।
हरिण नाशन चतुरभीषण
भषकनिशितनखा ॥ १

उरणजीवन हरणसौनिक
पणिसेवित भयदरिष्टा ।
जठर बाडबहेतिकाशित
जलधि भङ्गमुखा ॥ २

पवनपावक सलिलवेशित
सकलमानवजीवमारण ।
करुणकुल्या पापशल्या
भीष्मवर्षा मृत्युदंष्ट्रा ॥ ३

कालकन्याविलयनर्तन
विविधभङ्गीविशदसङ्गत ।
आन्ध्रजननीनयनप्रसृत
बाष्पतर्पितजीवनिकरा ॥ ४

प्रमथभीतिदसकलनिर्जर
झटिति मोहदनाशकामद ।
पापनाशद सततधर्मद
निटिलकीलकविततदाहक ॥ ५

पशुपतिप्रलय
ताण्डवप्रभवा
भीमाभीमा क्षणदा सा ॥ ६

ढमढम ढमढम
डमरूकभीकर
नादे लग्ना मग्ना सा ॥ ७

सूकरवानर
भैरवफेरव
चीरी केकीनिस्वन ॥ ८

घोटकहेषा
स्तनपाघोषा
कलिताप्रचण्डमारुत ॥ ९

कशाका छकछक
छकछक ताडित
पातितपादपनिचया ॥ १०

रोषितजीवन
भीषणगजरिपुगर्जन
रम्पा तकतककलपन ॥ ११

बहुझरदुर्मति
पङ्किल गलगल ।
गलगलसलिलासर्जन
विषधरधाराघटिता ॥ १२

पीडितजीवा
क्रन्दनपूरित
भण्डनशापाक्रान्ता सा ॥ १३

तरुणीवियोग
बधागाथा
कम्पितजनताकलिता ॥ १४

पल्लीवल्ली
नारीप्राणे
ऽवधिका भक्तासक्ता ॥ १५

मारुतमारण
हेमे भीमे
बालकसमिधाधाना सा ॥ १६

ध्वंसितधरणी
हरितावेक्षण
हालिकचित्ताघाता सा ॥ १७

सलिलस्थावर
मध्ये मारित
मानवमारिषमध्ये ॥ १८

माहामहिषी
मृततनुमध्ये
दुर्भरदुष्टे गन्धे ॥ १९

क्षुधिताकारा
कलिते तृषिता
रामे जीवे कामे ॥ २०

वसतां सतत
विमानभिस्सा
वीक्षणलालसजनगण ॥ २१

गाथाबाधा
मायाऽधारा
भौतिकमोहाबेथा ॥ २२

शान्तसागर मधुररूपे
शान्तपावकविमलदेशे ।
शान्तमारुतविशदकाले
आन्ध्रजनता यातु शान्तिम् ॥ २३



# श्रीनिवासः परं ब्रह्म विजयताम्

श्रीमतां गोडवर्ति शठकोपाचार्याणां श्रीपतिपुरीं संप्राप्तानां उपन्यासशृङ्खला संस्कृतविकास समित्या १८-३-७८, १९-३-७८ दिनयोः श्रीपतिक्षेत्रे, २४–३–७८ दिने श्रीगिरौ च व्यवस्थापिता।

१८–३–७८ दिवसे सुगतमतजिज्ञासुभिरपेक्षितं बौद्धमतं चतुर्विधमपि विततं सभायां वर्णयित्वा सुगतसमयसीमा शून्यतावाद एवेति सौगतसिद्धान्तं प्राचीकशन्।

१९–३–७८ दिवसे ब्रह्मातिसितसर्वशून्यतावादं सुगताभिमतं अभ्युपगम्य शङ्करभगवत्पादवर्णितं ब्रह्मास्तितावादं सुगतानभिमतं वेदान्तवर्णितं (व्यवृणोत्) व्यवृण्वन्।

पुरा भगवता रामानुजपरयोगिना भवभयाभितप्तजनभागधेयभावितावतरणेन भुवि अवतीर्णेन रत्नाग्निरत्नेषु शकाब्देषु व्यतीतेषु श्रीशैलपतेः पुरः वेदार्थः संगृह्योपन्यस्त इति प्रकाशम्। २८–३–७८ दिवसे स एव वेदार्थः अर्चारूपमाश्रितस्य यतिराजभिषजः पुरस्तात् विनीतैव विज्ञापितः श्रुतिस्मृतिसूत्राणां अन्तर्ज्वरापनशक्तस्य। स च वेदार्थः क इति जिज्ञासानिवृत्तये अशेष जगद्धितानुशासनश्रुतिनिकरसमधिगतोयमर्थ इति हस्तेन शृङ्गग्राहिकयानीय प्रदर्शितः। प्रत्यक्षं च समकालवर्तिनामेव प्रमापकं नत्वसमकालवर्तिनामिति मन्वानः शारीरिकशास्त्रभाष्योपक्रमे * अखिलभुवनजन्मस्थेमभङ्गादिलीले विनतविविधभूतव्रातरक्षैकदीक्षे। श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन् शेमुषी भक्तिरूपा।* इति मङ्गळपद्ये अखिलजगज्जन्मादिकारणं वेदान्तवेद्यं जिज्ञास्यमत एव ध्येय सद्ब्रह्मात्मादिशब्दवाच्यं नारा-

यणानुवाकस्थ नारायणावाच्यं, पुरुषसूक्तस्थ * ह्रीश्च ते लक्ष्मीश्च पत्न्यौ * इति निर्दिष्टं परंब्रह्म * वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसःपरस्ता*दिति श्रुत्या * अप्राकृतलोके वर्तमानमेव वस्तु न,परन्तु तदेव ब्रह्म जगज्जन्मादिकारणं सर्वज्ञं सत्यसङ्कल्पं सकलेतरविलक्षणं सकलसमाश्रयणीयत्वाय सकलमनुजनयनविषयतां गतः श्रीशैलाधित्यकाय विराजते इति वेदार्थः श्रीनिवासः परंब्रह्मेति करतलामलकतया प्रदर्शयामास । * विष्ठा नारायणः प्रभुः *इत्यनेनैकार्थ्यात् पाञ्चरात्रप्रामाण्यात् * सांख्ययोगः पञ्चरात्रं वेदारण्यकमेवचे *त्यादिप्रमाणबलात् शारीरकशास्त्रजिज्ञास्यं वेदान्तवेद्यं ब्रह्म श्रीनिवासः परंब्रह्मेतीममर्थं अवधारयेत्युपदिश्य * स्थितोस्मि गतसन्देहः करिष्ये वचनं तव * इति (मां) शब्दापयामास ।

एतादृशेन अतर्कितोपनतेन मङ्गळप्रवचनेन सर्वेपि जिज्ञासवः पूताः । एतादृशानां महतां अमोघप्रयत्नेनैव अस्माकं संस्कृतेः श्रीरक्षेति विज्ञापयामहे ।

इत्थम्,

संस्कृतविकससमितेः सदस्याः,

पि. टि. रंगाचार्यः,

कार्यदर्शी ।

# सिद्धौषधिः

— बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

आसीत्कश्चन धनिकः । सः स्वभावतोऽऽलसः नास्ति कश्चाभूत् । तस्य भार्याऽभूद् भगवद्भजनपूजनादिपरायणा सुतरामास्तिकाचापत्युः प्रवृत्तिः तस्यै नारोचत ।

"सर्वरक्षकं, सर्वसमर्थं सर्वव्यापिनं कृपालुं च भगवन्तं कुतो वा न भजसि ? स एवास्माकं सर्वथोद्धारकः परिक्षकश्च" इति तं चेतयति स्म सा प्रत्यहमात्मवः पतिदेवम् ।

का वा शीघ्रता ? यदाहं स्थविरः .... श्व आरभ्य तं कीर्तयिष्यमि" इति मुहुर्मुहुरपलपति स्म ।

जातु सः धनिकः रुग्णोऽभवत् । चिकित्सकः आगत्य परीक्ष्यैषधममच्छत् । अनुपानसमयञ्चाब्रवीत् । परन्तु अर्हवेलायां पत्नी जायुं नापाययत् । नितरां बाधितः रुष्टः सः पतिः जगर्ज "कुतो वा औषधं न ददासि ? इति । भार्या सहसाऽवदत्" का वा त्वरा ? श्वः पाययिष्यामि इति ।

पत्न्या वचनानात्मनो दोषं ज्ञात्वा तदैव भगवतो भजनमारभत धनी ।



हिन्दीभाषिणां सोदराणां सविधे

# मनःपूर्वकं विज्ञापनपत्रम्



मत्प्रिय सुहृत्सोदराः !

अह मेको भारते तेलुगुभाषिणां सोदराणां मध्ये अखिल-भारतीय राष्ट्रभाषा (सम्पर्कभाषा) मधिकृत्य भवत्सकाशे किंचि-द्वक्तुकामोऽस्मि । भारतस्य स्वतन्त्रस्य त्रिंशद्वर्षकालापगमानन्तर मपि तद्विषये वादविवादाः प्रचलन्तीत्येतद्दौर्भाग्यमेव नः। अत्र मदीया भावा निवेद्यन्ते । युक्तियुक्त मुपादेयमिति न वक्तव्यता-पेक्षा तत्र भवताम् ।

तत्र भवन्तः पवित्र भारतमातुः पुत्ररत्नानि, येषां मध्ये सूरदासः, तुलसीदासः, मीराबाई, कबीरदासः इत्यादयः प्रमुखा आसन् । अद्यत्व एव तुलसीकृत रामचरितमानसस्य ४०० तम वार्षिकोत्सवोऽपि महता समारोहेण सम्पादितः । काशी विश्व-नाथोऽपि भवद्विषयवासीति सत्यम् ।

११६७-६८ तमे वर्षे हिन्दी व्यतिरेकोद्यमः भारते विशिष्य दक्षिणापथे किमर्थ मुद्भूत इति भवतां विदितचरमेव । हिन्द्याः सम्पर्कभाषात्वेन् राष्ट्रभाषात्वेन च स्वीकारेण हिन्दीतरप्रदेश-वासिनां अतिरिक्त भाषाध्ययनभारः समापतितः; यस्तावत् हिन्दी-भाषाभाषिणां नैव भवेत् । ईदृशी भेदबुद्धिरेव हिन्दी व्यतिरेकस्य कारण मासीत् विशिष्य तमिलनाडुप्रदेशे ।

इत्थं संविधान धारा (३५१) प्रकारेण हिन्दी राष्ट्र-भाषात्वस्थायिभावं नाऽद्यापि प्रापिता । तथा च त्रिंशद्वर्ष-

परिमितः कालः वाद एव व्यतीतः । अतोऽहं हृदयपूर्वकं विज्ञापयामि भवतां सकाशे यत् राष्ट्रीयसमैक्यतायाः राष्ट्रीय गौरवसंस्थापनस्य च कृते भवद्भिः महान् त्यागः औदार्यपुरस्सरं कर्तव्य आपतितः । आंग्ल्याः अनर्हत्वेन हिन्द्याश्च अयुक्तवयस्कत्वेन, संस्कृतस्यैव राष्ट्रीयगौरवगरिमोपेतं भारतीयसमैक्यतासम्पादकं च राष्ट्रभाषास्थानं - सम्पर्कभाषास्थानं प्रदेयम् । नाऽत्र कस्याऽपि अधिकतरो भारः । सर्वसमता च भारते स्थापिता भवेत् । संस्कृतस्य राष्ट्रभाषात्व - सम्पर्कभाषात्व प्रकल्पनं यदि भवन्तः अङ्गीकुर्युः तर्हि देशो न ससंक्षोभरहितः प्रवर्धेत ।

संस्कृतं भारतीय सांस्कृतिकभाषात्वेन अद्याप्यनुवर्तमानमेवेत्येतन्नापलपितुं केनाऽपि शक्यते। अत एव भारतीयानां सम्पर्कभाषा राष्ट्रभाषा च भवितु मर्हति । अत स्साग्रहं विज्ञापयामि यत् संविधानधारा (३४३ तः ३५१) परिवर्तनाय नेतृनावर्जयेयुः संस्कृतं च राष्ट्रभाषास्थानं प्रापयेमेति। अत्र तत्र भवन्त स्सर्वेऽपि संवदेरन्निति विश्वसिमि ।

इत्थम्,

भवत्सौहार्द सहकाराभिलाषी,

बि. बि. सुब्बारायुडु,
अखिलभारतीय
संस्कृतराष्ट्रभाषाकारिणी सभा,
समायोजक कार्यदर्शी
(आर्गनैजिंग् सेक्रटरी)

दिनाङ्कः १८-३-७८
"गिरिजा"
स्टुवर्ट् पेटा, पिठापुरम्,
पूर्वगोदावरीजिल्ला,
आन्ध्रप्रदेशः ।

# सिद्धाश्रम संस्कृताध्यापकाऽभ्यासकक्ष्या

★

श्री सिद्धगुरुकृपया सिद्धाश्रम संस्कृताऽभ्यासकक्ष्यायाः पूर्तिवैभवः पूज्यश्री सिद्धनरहरिस्वामिनः अग्रे प्रार्थनापूर्वकं समारब्धः। आश्रमकार्यदर्शी श्री सि. के. नरसिह्माचार्यः स्वागतभाषणे एतादृश संस्कृताध्यापकाऽभ्यास कक्ष्या तमिल्नाडुमण्डले प्रथमतः सिद्धाश्रमे एव आरभ्यते इति अवदत्। भारत - उपराष्ट्रपति श्री बि. डि. जेट्टिमहाशयाः' तमिलनाडुमण्डल गवर्नर् श्री प्रभुदास् पट्वारिमहाशयाः, पूज्यश्री तिलक् महाराज् अरविन्दाश्रमं तिरुप्पनन्ताल् आधीनं तिरुवावडुतुरै आधीनं, धर्मपुरं आधीनं – एभ्यः आगतविशेषसमाचाराः आश्रमकार्यदर्शिना श्री जी. एम. रामलिङ्गेन पठिताः।

अभ्यासकक्ष्यासु भागभाजः सर्वे विद्यार्थिनः संस्कृतं, आङ्ग्लिलं, हिन्दी, मातृभाषा इत्यादि भाषासु भाषणं अकुर्वन्। मदुरै विश्वविद्यालय संस्कृतविभागाध्यक्षः श्री डाक्टर् जी. सुन्दरमूर्तिमहाशयाः संस्कृताय सिद्धाश्रमस्य महासेवां अवर्णयत्। तदनन्तरं आश्रम संस्कृतविद्वांसः श्री एम्. वि. नरसिह्माचार्याः, श्री ए. रामकृष्णशास्त्री, श्री वि. सूक्ष्मपुरीश्वरः, श्री टि. आर्. दामोदरः एते संस्कृतभाषायाः माहात्म्यमधिकृत्य भाषणं अकुर्वन्।

तदनन्तरं संस्कृतविदुषां पूज्यश्री स्वामिजी योग्यता संभावनानि, भागभाजां विद्यार्थिनां पारितोषिकानि च दत्वा आशिषं अवादीत्। कार्यदर्शी श्री जी. एम्. रामलिङ्गस्य धन्यवादनिवेदनानन्तरं सभा संपूर्णतां अवाप।

इत्थम्,
जि. एस्. रामलिङ्गम्
परिपालकसंघसभ्यः, सिद्धाश्रमम्।

# दुर्जना अनर्थकारकाः

— ना. व. निगमान्तः, प्रोद्दुटूरु ।

१. खेदे शान्तवचांसि मोदसमये चिन्तापहारीण्यहो
सन्दर्भानुगुणं वदन्त इह ये सिद्धान्तहीना जनाः ।
अन्यप्रीतिसमार्जनैकनिरताः गूढारयो देहिनां
कापट्याहतचेतसो गड्डुनिभा विस्रम्भयोग्या न ते ॥

२. मित्रे कुप्यति मांसले तृणमिवानम्रीभवन्ति स्वयं
वाताविद्ध मसत्यभासुर ममी सत्यापयन्ति क्षणात् ।
ये कुक्षिम्भरयोऽनुकूलकथने दक्षा भवन्ति क्षितौ
भस्माच्छादितगूढवह्निसदृशा विश्वासयोग्या न ते ॥

३. स्वैरं वक्रितकन्धराः स्मितमुखा मार्गागतान्मानवान्
पृच्छन्तः कुशलं सदाऽपरिचितानप्यात्तगन्धा मुहुः ।
जल्पन्तः समयोचितां प्रतिदिनं निन्दां स्तुतिं ये नराः
लोकानिष्टकरा ध्रुवं जडधियो विस्रम्भयोग्या न ते ॥

४. पक्षं कञ्चन सादरं प्रथममाश्लिष्यन्ति गाढं पुन –
र्मुक्त्वा तं सहसाऽऽश्रयन्ति दिवसे कक्ष्यान्तरं ये परे।
वित्तावाप्तिरताः स्थिरं समवनं रुन्धन्त्यमी दैशिकं
कुड्याग्रस्थबिडालवन्न नियता विस्रम्भयोग्या न ते ॥

५. गेहं मञ्जुलमाशु नाशयति हा पीनः कुपुत्रः कुलं
श्रेष्ठं तत्खनकः परोक्षवसतिः सन्दृश्यमानो जनैः ।
देशं संकुलयन्ति फल्गुवचनैः सत्याद्विभिन्नैरिमे
सन्दर्भानुसरद्वयोविभूतिमलिना विश्वासयोग्या न ते ॥



# तेलुगु - साहित्य - दिग्दर्शनम्

[ पूर्वानुबन्धः ]

"अवरः"

**समकालीनाः —**

एर्रनार्यस्य समकालीनानां मध्ये भास्करः नाचन - सोमनाथश्चेत्युभौ प्रमुखौ। अत्रेद मवधेयं यत् उभावप्यमू तदेव ग्रन्थद्वयं रचयितु मुद्युक्तौ यत् एर्रनार्येण रचितपूर्वमासीत्। उदाहरणार्थं — तेलुगुभाषायां प्रथमरामायणग्रन्थः एर्रनार्येण रचित इत्युच्यते। कालवशं गतः स नोऽपलभ्यतेऽधुना। भास्करोऽपि शिष्यै र्मित्रैश्च परिवृतः रामायणग्रन्थं रचयामास। यस्य भास्कररामायणमिति प्रसिद्धिः। इदं चम्पूकाव्यत्वेन विश्रुतम्।

एव मेव सोमनाथोऽपि "उत्तरहरिवंशं" रचयामास। सोमनाथस्य कविताप्रभावं परिशील्य केचन विमर्शकाः एर्रनार्यस्य कृतिमपेक्ष्य तदीयां कृति मुत्तमां प्रस्तुवन्ति। यद्यप्युभयो विषये बहु वक्तव्य मस्ति; तथाऽपि संक्षेपत स्तावदिदं सुवचं यत् एर्रनार्यः रचनायां शन्तो गंभीरश्चेत् सोमनाथः भावोद्वेगेन क्रान्तिगामी भवति इति।

भास्करस्याऽपि पूर्वं तेलुगुभाषायां रामायणग्रन्थः कश्चिदभिव्यक्तः; यः रङ्गनाथरामायणमिति प्रथते; यस्य च रचयिता गोन बुद्धारेड्डिनामा कविः। केचन विमर्शकाः द्विपदरूपच्छन्दोबद्धस्य अस्य काव्यस्य रङ्गनाथनामा कविरेव यथार्थनिर्मातेति अभिप्रयन्ति। यत्किञ्चिदस्तु सत्यं; रङ्गनाथरामायणं तावदवधेयमस्ति, यत स्तस्मिन् मूलकथातः बहूनि परिवर्तनानि समुल्लसन्ति।

जम्बुकुमार - कालनेमि - सुलोचनावृत्तान्ताः, विशिष्य सेतुबन्ध-समये रामस्य साह्यं कृतवतः शशकसदृशप्राणिविशेषस्य (उडुत आन्ध्र्यां) वृत्तान्तश्च अद्भुतावहाः कथाः, यासां न केवलं वाल्मीकिरामायणे किन्तु तदितरेषु भाषान्तरीयेषु च तेषु रामायणेषु नैवोल्लेखः परिदृश्यते। किञ्चद्विपद काव्यमिदं गानयोग्यं जनप्रियं चान्ध्रप्रदेशे। अस्मिन् काव्ये कतिपयभागाः पुत्तलिका नाटकप्रदर्शने (तेलुगु-तोलुबोम्मलाट) गीयन्ते। रावणस्य तत्पारिवारिकाणां च अन्येषां गुणविशेषान् ज्ञातुं अवश्यमिदं रामायणं पठनीयमित्यत्र नैव संशयः।

## पाल्कुरिकि सोमनाथः — ३

**शैवकविता —**

नन्नयार्यः वैदिकमतसम्प्रदाय मनुसृत्य तत्प्रचाराय काव्यरचना यथाऽकरोत् तथैव ततः पश्चादागताः कवयः शैवमतानुयायिनोऽभवन्। अतोऽत्र नाऽऽश्चर्यस्य अवकाशः यत् द्वादशशताब्द्यां त्रयोदशशताब्द्यां वा (१२ वा १३) आविर्भूताः कृतयः (काव्यानि) प्राधान्येन शैवमतसम्बन्धिन्यः; तत एव हेतोः इमं समयविशेषं शैवकवितायुगमिति कथयन्ति। अस्मिन् युगे पाल्कुरिकि सोमनाथः प्राधान्यं भजते।

**नन्नेचोडः —**

शैवकवितायुगेऽस्मिन् नन्नेचोडः यस्य नन्निचोड इत्यपि व्यवहारोऽस्ति, प्रमुख कविपुंगवाना मग्रेसरो भवति। कतिपय-साहित्यैतिहासिकाभिप्रायानुसारेण नन्नेचोडः नन्नयपूर्वकालीन इति ज्ञायते। केचित्तु तं (१४) चतुर्दशशताब्दीयं मन्यन्ते। अयं

द्वादशसर्गसंयुतस्य कुमारसम्भव नामक काव्यस्य प्रणेता । कविः काव्ये सविशेषं विपुलवर्णनानि संयोजयामास । एतदीयं काव्यं पश्चात् प्रबन्धकाव्यानां पूर्वरङ्गं सम्भाव्यते; यतस्तानि वर्णना गर्भाणि (वर्णना प्रधानानि) अभवन् ।

**तदीया काव्यदृष्टिः —**

अस्य अभिप्रायानुसारेण उत्तमकाव्ये अष्टादशवर्णनानि नवरसाः ३६ षट्त्रिंशदलङ्काराश्चावश्यं समायोजिता भवेयुः । सदसत्काव्यान्यधिकृत्य नन्नेचोडस्य अभिप्रायः हृदयङ्गमः । स एव साह — "सत्कवेः काव्यं धानुष्कस्य शरवद्भवेत्; लक्ष्यवेधी यथा शरः तथा सत्काव्यं श्रोतॄणां हृदयङ्गमं भवेत् । "स पृच्छति — किमिदमपि काव्यं भवितु मर्हति यत् प्रेक्षावतां श्रोतॄणां शिरः-कम्पं जनयितुं न पारयति । "तदुपगत समास सन्धियोगं, सममधुरोपनतार्थवाक्यबद्धं" इति रीत्या सत्काव्यं मत्तेभवन्निराटङ्कं पुरस्सरेत् । एतादृशी तदीया काव्यदृष्टिः । असत्कवीन् लक्ष्यीकृत्य स एवं वाग्बाणं विसृजति — यथा मक्षिकाः इक्षुरसं विहाय शिथिलीकृते नीरसे इक्षुकाण्डे संसक्ता भवन्ति; तथा असत्कवयः उत्तम काव्यास्वादनं परित्यज्य अधमकाव्यालापेषु समासक्ता भवन्ति । अयं कविः कर्ममार्गं समर्थयति । मनोवाक्कायैः भक्तिपुरस्सरं शिवाराधनं कर्तव्यम् । स्वात्माऽपि स एव शिव एति निश्चित्य शिवोऽहमिति भावयेत्; अयमेव मोक्षोपायः; अयं च कर्ममार्गेणैव सुलभः इति कवे रभिप्रायः । "मतप्राबल्ये मतद्वेषोऽपि प्रबलो भवति" इत्येत दैतिहासिकं सत्यम् । एवं च शैवकवितायुगेऽपि परमतसहिष्णुतायाः अभावेन सामाजिकनीतिरीतयो वक्रतां गता इति सुवचम् । मतद्वेषेण मतान्तरस्थानां विषये विहिताः अत्याचाराः कुमारसम्भवकाव्ये उल्लेखिताः ।

**मल्लिकार्जुनपण्डिताराध्यः —**

उल्लेखनीयोऽनन्तर कविः मल्लिकार्जुनपण्डिताराध्यः यः "शिवतत्वसारम्" नामकं (५००) पञ्चशतपद्यकं काव्यमलिखत्। अयं महाकविरिति प्रतीयते; परन्तु एतदीयत्वेन संभाविताः कृतयो नोपलभ्यन्ते, उच्छिन्नत्वात्। कविः कस्मिंश्चित्पद्ये ब्रवीति, यत् "ब्राह्मणः, यदि स शिवभक्तो न भवति, तर्हि अधमवर्णादप्यधमो भवति; यदि अधमवर्णः शिवभक्तो भवति, तर्हि स ब्राह्मण मप्यतिशेते" इति।

**यथावाक्कुल अन्नमय्या —**

क्री. श. १२४२ वत्सरे कृतस्य "सर्वेश्वरशतकस्य प्रणेता य भावाक्कुल अन्नमार्योऽपि उल्लेखनीयः शैवकवि र्भवति। भक्तिपारवश्येन प्रवृत्तेय कृतिः पाठकान् तन्मयानातनोति। भक्तानां माहात्म्यमधिकृत्य अस्य कवेः केचन भावाः अधोनिर्दिश्यन्ते —

"भगवति भक्तानां सश्रद्धमाराधनमेव वरीयः। पवित्रतम नदीषु स्नानापेक्षया भागवतोत्तमानां पादावनेजनजलस्य शिरसि प्रोक्षणमेव श्रेयस्करम्। भागवतसन्दर्शनेन सर्वेषां पापानामपनोदनं भवति। भागवता स्तीर्थभूताः, सर्वतीर्थाणि तेषु सम्मिलन्ति।

हे देवदेव! यद्येकोऽप्यन्तरङ्गभक्तः यः कश्चित् यत्र क्वाऽपि, यस्मिन् कस्मिंश्चिद्दिक्कोणे, यत्र कुत्र चिन्नगरे प्रदेशे वा तव पादावभ्यर्चयेत्, स प्रदेशः तन्नगरं वा समस्तं देशं सर्वांश्च जनान् तथा पुनाति यथा गङ्गायां यत्र क्वाऽपि स्नानं पवित्रयति।

भारतसर्वकारेण पुरस्कृता

# गैर्वाणी

वार्षिकम् ५-००

---

## प्रहेलिका



नाथ विलोकय मेघं• नहि नहि पापं तवातिपुण्यायाः ।
नहि कथयामि *पयोधरमपसारय कञ्चुकीमुरसः ॥

•अम्बुदम्; (पक्षे) मेऽघं पापम् ।  *मेघम् (पक्षे) स्तनम् ।

Please mention your membership Number for easy correspondence.

R. N. 1845/60. Postal C. T. R. 11.

भान्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No.27-A 3/65 Dated 14-7-'65.

Licensed to Post without Prepayment. LICENCE No. 1.

# गैर्वाणी

To

Sri

If undelivered please return to
Sanskrit Bhasha Pracharini Sabha, Chittoor A. P. 517001

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary, S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri K. V. Raghavan (in-charge) at Vijaya Press, Chittoor. (A. P.) C. 1500.